नतेऽभिधेये टीटच्, नाटच्, भ्रटच्—प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकापि। पुरुषोऽपि तथोच्यते—अवटीटः, अवनाटः, अवभ्रट इति॥

**नेर्बिडज्बिरीसचौ ॥ ३२ ॥**

'नते नासिकायाः' इत्यनुवर्त्तते, 'संज्ञायाम्' इति च। निशब्दान्नासिकाया नतेऽभिधेये बिडच्, बिरीसच्—इत्येतौ प्रत्ययौ भवतः। निबिडम्। निबिरीसम्। तद्योगान्नासिकापि। पुरुषोऽपि—निबिडः, निबिरीसः।

कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद्भविष्यति[1]॥

**इनच्पिटच्चिकचि च ॥ ३३ ॥**

'नेः' इत्येव, 'नते नासिकायाः' इति च। निशब्दान्नासिकाया नतेऽभिधेये इनच्, पिटच्—इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक,चि—इत्येतावादेशौ भवतः। चिकिनः। चिपिटः।

**पदमञ्जरी**

भावे क्तः', नीचैस्त्वमित्यर्थः। *नासिकायाः सम्बन्धिनीति*। सम्बन्धश्च नमने कर्तृत्वेन, सूत्रे तु 'नपुंसके भाव उपसंख्यानम्' इति कर्त्तरि षष्ठी। यद्वा—शेषविज्ञानात्सिद्धमिति शेषलक्षणैव। अवटीटादिषु नासिकासाधने नमने वर्त्तमानादुपसर्गात्स्वार्थे प्रत्ययः। कथं तर्हि नासिका पुरुषश्च तथोच्यते? इत्याह—*तद्योगादिति*। टीटच्ष्टकारस्येत्संज्ञाभावः 'चुटू' इत्यत्रैव व्याख्यातः॥

*इनच्पिटच्चिक चि च*॥ *ककारः प्रत्यय इति*। अकारो विवक्षितः; चकारः,

**न्यासः**

भावे निष्ठां दर्शयति। **नासिकायाः सम्बन्धिनीति**। अनेनापि नासिकाया इत्यपि सम्बन्धलक्षणा षष्ठी। यदि नासिकायाः सम्बन्धिनि नते वाच्य एते प्रत्ययाः, कथं तदेतेन नासिका पुरुषश्चाभिधीयते? इत्याह—तद्योगादिति॥

**नेर्बिडज्बिरीसचौ**॥ **कथं निबिडा इति**। तद्योगोऽत्र नास्ति। अतस्तद्योगाभावात् तथाभिधानं नोपपद्यत इत्यभिप्रायः। **उपमानाद् भविष्यतीति**। निबिडतया नासिकया तुल्याः केशा वस्त्राणि च निबिडतया। तेनोपमानात् तदुभयं निबिडशब्दवाच्यं भविष्यति॥

**इनच्पिटच्चिक चि च**॥ **ककारः प्रत्ययो वक्तव्य इत्यादि**। वक्तव्यो व्याख्येय

1. 'घनत्वसाधर्म्यात्'-इत्यधिकं कुत्रचित्।

❀ ककारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्याऽऽदेशः ❀। चिक्कः। तथा चोक्तम्—'इनच्पिटच्काश्चिकचिचिकादेशाश्च वक्तव्याः' इति ॥

❀ क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी ❀। क्लिन्नस्य चिल्, पिल्—इत्येतावादेशौ भवतो लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी चिल्लः। पिल्लः ॥

❀ चुलादेशो वक्तव्यः ❀। चुल्लः।

अस्येत्यनेन नार्थः। चक्षुषोरेवाभिधाने प्रत्यय इष्यते। क्लिन्ने चक्षुषी चिल्ले। पिल्ले। चुल्ले। तद्योगात्तु पुरुषस्तथोच्यते ॥

## उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३४ ॥

उप, अधि—इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययो भवति। संज्ञाधिकाराच्च नियतविषयमासन्ना-

### पदमञ्जरी

एवकार इत्यादिवत् कारशब्दः, कप्रत्यय इत्यर्थः। *तथा चोक्तमिति*। सूत्रे निशब्दस्य द्वावादेशौ द्वौ च प्रत्ययौ विहितावित्यादेशप्रत्ययत्रयविधानार्थमेतद् वार्त्तिककारेणोक्तम्। *अस्य चक्षुषी इत्येतस्मिन्नर्थ इति*। यद्यपि चक्षुषी प्रकृत्यर्थविशेषणम्, अस्येति षष्ठ्यर्थे प्रत्ययः, तथापि क्लिन्नत्वस्य चक्षुर्गतत्वं प्रत्ययस्यैव द्योत्यमिति मत्वैवमुक्तम्।

*अस्येत्यनेनेति*। वाक्यैकदेशं प्रत्याचष्टे, कस्मात्? *नार्थः*, इत्याह। *चक्षुषोरेवाभिधान इति*। चक्षुषोर्वर्त्तमानात्क्लिन्नशब्दात्स्वार्थे प्रत्यय इत्यर्थः। कथं तर्हि पुरुषस्याभिधानम्? इत्याह—*तद्योगादित्यादि*। अर्शआदिषु 'स्वाङ्गाद्धीनात्' इति पठ्यते, तेन मत्वर्थेऽकारः ॥

*उपाधिभ्यां त्यकन्नासन्नारूढयोः* ॥ *नियतविषयमिति*। पर्वतविषयम्। आस-

### न्यासः

इत्यर्थः। व्याख्यानं तु चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम्। **तथा चोक्तमिति**। वार्त्तिककारेण। **अस्येत्यनेन नार्थ इति**। वाक्यैकदेशं प्रत्याचष्टे। यदि चक्षुषोरेवाभिधाने प्रत्ययः पुरुषस्य तथाभिधानं न प्राप्नोतीत्यत आह—**तद्योगादित्यादि** ॥

**उपाधिभ्यां त्यकन्नासन्नारूढयोः** ॥ **संज्ञाधिकाराच्चेति**। 'नते नासिकायाः' इत्यादिसूत्रात् संज्ञाधिकारानुवृत्तेः। **नियतविषयमिति**। पर्वतविषयमेवासन्नारूढं गृह्यते।

रूढं गम्यते । पर्वतस्यासन्नम्=उपत्यका । तस्यैवाऽऽरूढम्=अधित्यका । 'प्रत्ययस्थात्कात्पूर्वस्य' इतीत्वमत्र न भवति, संज्ञाधिकारादेव[1] ॥

## कर्मणि घटोऽठच् ॥ ३५ ॥

निर्देशादेव समर्थविभक्तिः । कर्मशब्दात्सप्तमीसमर्थाद् 'घटः' इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति । घटत इति घटः । कर्मणि घटते कर्मठः पुरुषः ॥

## तदस्य सञ्जातं तारकादिभ्यः इतच् ॥ ३६ ॥

तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्यः 'अस्य' इति

### पदमञ्जरी

आरूढमिति समाहारद्वन्द्वः, आसन्नम्=समीपम् । आरूढम्=उच्चस्थानम् । *संज्ञाधिकारादेवेति* । तेन 'इत्त्वप्रतिषेधे त्यकन उपसङ्ख्यानम्' इति न वक्तव्यं भवति ॥

*कर्मणि घटोऽठच्* ॥ *कर्मशब्दादिति* । पारिभाषिकस्य कर्मणो ग्रहणं न भवति; घटतेरकर्मकत्वात्, मासं घटत इत्यादौ कालादिकर्मणां सम्भव एवेति चेद् ? एवमपीह समर्थविभक्तेः सप्तम्या असम्भवः । *घटत इति घट इति* । पचाद्यच् । *कर्मठ इति* । अकारोच्चारणाट्ठकारमात्रस्याप्रत्ययत्वादङ्गसंज्ञां प्रति निमित्तत्वाभावात् ठस्येकादेशो न भवति ॥

*तदस्य सञ्जातं तारकादिभ्य इतच्* ॥ तारकादिषु बुभुक्षापिपासाशब्दयोः किमर्थः पाठः, यावता सन्नन्तावेतौ, तथा च निष्ठायामिटि च कृते सिद्धम्—बुभुक्षितः,

### न्यासः

तेन वृक्षस्यासन्नम्, प्लक्षस्यारूढमित्यत्र न भवतीति भावः। अथोपत्यका, अधित्यकेत्यत्र 'प्रत्ययस्थात् कात् पूर्वस्य' इत्यनेनेत्त्वं कस्मान्न भवति ? इत्यत आह—**प्रत्ययस्थात् कादिति** । यद्यत्रेत्त्वं स्यात् संज्ञारूपं न सिध्येत्; नोपत्यिकाधित्यिकेत्येवंरूपा संज्ञा । तस्मात् संज्ञाधिकारादित्त्वं न भवति ॥

**कर्मणि घटोऽठच्** ॥ **'कर्मणि'** इत्यनेन कर्मणीति स्वरूपग्रहणं दर्शयति । अथ पारिभाषिकस्य कर्मणो ग्रहणं कस्मान्न भवति ? असम्भवात् । असम्भवस्तु घटतेरकर्मकत्वात् । अठच्प्रत्ययेऽकारोच्चारणं ठस्येकादेशनिवृत्त्यर्थम् ॥

**तदस्य सञ्जातं तारकादिभ्य इतच्** ॥ तारकादिषु बुभुक्षा-पिपासाशब्दौ पठ्येते, तयोः किमर्थः पाठः, यावता सन्नन्ताभ्यां निष्ठायामिटि च कृते बुभुक्षितः, पिपासितो

---

1. 'न हि कृते इत्वे संज्ञा प्रतीयते'-इत्यधिकं कुत्रचित् ।